

॥ श्रीसीतारामचन्द्राभ्यां नमः ॥
॥ श्रीमते रामानन्दाचार्याय नमः ॥
॥ श्रीमद्गोस्वामितुलसीदासाय नमः ॥
॥ श्रीमते अग्रदेवाचार्याय नमः ॥

# ॥ श्रीरामस्तुतिः ॥

*This text has been prepared by Vishal Pandey (B.Tech IIT Kanpur) with the blessings of*
***Chitrakūṭa Tulasīpīṭhādhiśvara Jagadguru Rāmānandāchārya Śrī Svāmī Rāmabhadrāchārya***

**सीतानाथ समारम्भां रामानन्दार्य मध्यमाम्।**
**अस्मदाचार्य पर्यन्तां वन्दे श्री गुरु परम्पराम्॥**

# श्रीरामस्तुतिः

## अन्त्यज उवाच

श्रीराम राम सुखद प्रतिबोधमूर्ते प्रत्यङ्गरङ्गमयमङ्गलवृन्दमूर्ते ।
चञ्चन्महामधुरिमामृतसारमूर्त्ते मां पाहि सम्प्रति गतं चरणाब्जमूले ॥ २१ ॥

त्रैलोक्य रक्षण कलैकलसत्कृपाढ्य भक्तश्रुतिद्विजवराभयदानदक्ष ।
भूभारहारमिषदिव्यनवाव तारिन् मां पाहि सम्प्रति गतं चरणाब्जमूले ॥ २२ ॥

ब्रह्माण्डकोटिघटनोद्घटनस्वतन्त्र शक्तिप्रसारनिरवध्यमितात्मलील ।
अत्यद्भुतप्रचुरमानुषभावनाढ्य मां पाहि सम्प्रति गतं चरणाब्जमूले ॥ २३ ॥

कालात्मना सृजसि पालयसि प्रभोऽन्ते तेनैव संहरसि सर्वमिमं प्रपञ्चम् ।
दृङ्मात्रशेषपरिदृश्यनिधान नित्यं मां पाहि सम्प्रति गतं चरणाब्जमूले ॥ २४ ॥

मायात्मना प्रकटमप्यखिलात्मसाक्षिन् सम्मोहयस्यविरतं प्रतिरुद्धबोधान् ।
तेनैव संततनिगूढनिजात्मभावं मां पाहि सम्प्रति गतं चरणाब्जमूले ॥ २५ ॥

सूर्यो यथोद्यगिरिं समुपेत्य सर्व लोकान्धकारशमने प्रगृहीतदीक्षः ।
देवस्तथा रघुकुलं त्वमपि प्रतीतो मां पाहि सम्प्रति गतं चरणाब्जमूले ॥ २६ ॥

जीवस्य कृत्यमियदेव यदुत्तमाङ्गं त्वत्पादपद्मसविधे प्रमुदावनाम्यम् ।
तन्मात्रभक्तिगुणवश्यतमो भवांस्तु मां पाहि सम्प्रति गतं चरणाब्जमूले ॥ २७ ॥

रामेति नाम तव योगकलाधिकं स्याद्यत्कष्टसंततिमृते कलयेद्विमुक्तिम् ।
किं नाम नात्मसुखलाभकृते गृणीते मां पाहि सम्प्रति गतं चरणाब्जमूले ॥ २८ ॥

भीता भवाब्धिविततोर्मिभिरत्यनल्पैर्नान्यत्र सुस्थमनसो मनुजा भवन्ति ।
एकं विहाय भगवन्तमृते भवन्तं मां पाहि सम्प्रति गतं चरणाब्जमूले ॥ २९ ॥

कालोऽयमुग्रकलनः कलयत्यनल्पां शक्तिं जगत्सु खलु भूरिभयातुरेषु।
न त्वाश्रितेषु भवतश्चिरमङ्घ्रिपद्मं मां पाहि सम्प्रति गतं चरणाब्जमूले॥ ३०॥

त्वामाश्रिता गतभयाः शरणागतैक श्रीवज्ज्रपञ्जरविभो करुणैककन्द।
खेलन्ति कालशिरसि स्वपदं निधाय मां पाहि सम्प्रति गतं चरणाब्जमूले॥ ३१॥

मुग्धा भवन्ति बहुजल्पितमागमं ये संलब्धये तव मुहुर्मृगयन्ति विप्राः।
न त्वां स्पृशन्ति निजभक्ति कलैकलाभम् मां पाहि सम्प्रति गतं चरणाब्जमूले॥ ३२॥

दीनं तथातुरमनेकभवोर्मिनष्टप्रज्ञं व्यतीतकुशलं बहुदुःखमग्नम्।
मूढं विशालविषयावलिकृष्टचित्तं मां पाहि सम्प्रति गतं चरणाब्जमूले॥ ३३॥

स्तब्धंकदाप्यकृतसत्परिचर्यमुग्रबुद्धिं निजात्महतिजातकदर्थनं च।
व्यर्थव्यतीतजनुरायुषमात्रदोषं मां पाहि सम्प्रति गतं चरणाब्जमूले॥ ३४॥

उच्चैरबद्धबहु जल्पनशीलमन्तः कामावसन्नमनुदीरितनामजाप्यम्।
पापं समस्तविपरीतकरं कुशीलं मां पाहि सम्प्रति गतं चरणाब्जमूले॥ ३५॥

नामोद्धृताखिलजगज्जन सौख्यदायी स्वानन्दसिन्धुलहरी परियोजितस्वः।
अत्युन्नतस्वविभवोचित भव्यकारी मां पाहि सम्प्रति गतं चरणाब्जमूले॥ ३६॥

आयुः प्रयाति विफलं सकलेष्टदायि स्तत्ते स्मृतिं विद्धतो मनुजस्य नित्यम्।
साफल्यमेति जगतीति विचिन्त्य सन्तं मां पाहि सम्प्रति गतं चरणाब्जमूले॥ ३७॥

॥ इति भुशुण्डि रामायणे उत्तरखण्डे अन्त्यज कृत राम स्तुतिर्नाम अष्टचत्वारिंशोध्यायः॥

भुशुण्डि रामायण / उत्तरखण्ड / अध्याय ४८ / श्लोक २१-३७